ह० मर्त्विजः प्राङ्मुखा उदङ्मुखाश्च मन्त्रार्थ मनुस्मरंतो रुद्रं ध्यायंतश्च अष्टविध मंत्रवि-
म० भागान्यतम मंत्रविभागेन होमंकुर्युः। तत्रादौ भूतशुद्ध्यादि मातृकान्यासांतं कृत्वा
रु० पञ्चाङ्गन्यासा न्कुर्यात् भूतशुद्ध्याद्यकरणे न वैगुण्यं करणेफलभूयस्त्व मित्याहुः।
प० अथन्यासाः। ते चानादेशे सर्वेप्यंगुष्टानामिकाभ्यांकार्याः। तत्र ताव त्प्रथमञ्छन्दः पुरु-
५८ षन्यासः। ओं तिर्यङ्बिलाय चमसायोर्ध्वबुध्नाय छन्दः पुरुषाय नमः। इति
शिरसि। ओं गौत्तम भरद्वाजाभ्यां नम इति नेत्रयोः। ओं विश्वामित्र जमदग्निभ्यां नम
इति मन्त्राष्टत्या श्रोत्रयोः। ओं वसिष्ट कश्यपाभ्यां नम इति नासापुटयोः। ओं अत्रये नम शिवम्
इति वाचि। ओं गायत्र्यै छन्दसेनमः। ओं अग्नये नम इति शिरसि। ओं उष्णिहेछन्दसे ५८
नमः। ओं सवित्रे नम इति ग्रीवायां। ओं ककुभेछन्दसे नमः। ओं बृहस्पतये नम

इत्यनूके। अनूकः। पृष्ठवंशः। ओं बृहद्रथन्तराभ्यां नमः। ओं द्यावापृथिवीभ्यां नमः। इति दक्षिणबाहौ। एवमेव पुनर्वामबाहौ। त्रिष्टुभे छन्दसे नमः। ओं इन्द्रायनम इतिमध्ये मध्यमुदरं। ओं जगत्ये छन्दसेनमः ओं आदित्याय नमः इति मन्त्रावृत्त्याश्रोण्योः। अतिछन्दसेनमः। ओं प्रजापतये नम इति लिङ्गे। ओं यज्ञाय यज्ञियाय छन्दसे नमः। ओं वैश्वानराय नम इति गुदे। ओं अनुष्टुभे छन्दसे नमः ओं विश्वेभ्यो देवेभ्यो नम इति मन्त्रावृत्त्या ऊर्वोः। ओं पङ्क्त्यै छन्दसे नमः। ओं मरुद्भ्योनम इत्यष्ठीवतोः मन्त्रावृत्त्या अष्ठीवतो जान्वोः। ओं द्विपदायै छन्दसे नमः ओ विष्णवे नम इति मन्त्रावृत्त्या पादयोः। ओं विछन्दसेनमः ओं अङ्गरोनम इति हस्तद्वयविपर्यासेन मस्तकादिपादान्तं सर्वाङ्गेषु। इति सर्वानुक्रम सूत्रविहितश्छन्दः पुरुषन्यासः। अथ पञ्चाङ्गरुद्राणांन्यासः। मनोजूतिरित्यस्याङ्गिरस

बृहस्पतिर्ऋषिः यजुः विश्वेदेवादेवता हृदयन्यासे वि०। (१) ओं मनोजूति० हृदयाय नमः। अबो-
ध्यग्नि रित्यस्य बुधगविष्ठिरा ऋषी त्रिष्टुप् छन्दः अग्निर्देवता शिरोन्यासे वि०। (२) ओं अबोध्यग्निः
स० शिरसे स्वाहा। मूर्द्धानमित्यस्य भरद्वाजऋषिः त्रिष्टुप् छन्दः वैश्वानरोग्नि र्देवताशिखान्यासे
वि०। (३) मूर्द्धानन्दिवो०। शिखायैवषट्। मर्माणित इत्यस्य विवस्वान् ऋषिः त्रिष्टुप् छन्दः
लिङ्गोक्तादेवता कवचन्यासेवि०। ओं मर्माणिते० कवचायहुं। विश्वतश्चक्षु रित्यस्य विश्वकर्मा-
भौवन ऋषिः त्रिष्टुप्छन्दः विश्वकर्मादेवता नेत्रन्यासे विनियोगः। (४) ओं विश्वतश्चक्षुरुत०।
नेत्रत्रयायवौषट्। मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रो देवता अस्त्रन्यासेवि०।
(५) ओं मानस्तोके० अस्त्राय फट्। इतिषडङ्गन्यासः प्रथमः। योते रुद्र इति परमेष्ठी अनुष्टुप्

(१) २।१३। (२) १५।२४। (३) ७।२४। (४) १७।१९। (५) १६।१६।

च्छन्दः एकोरुद्रोदेवताशिखान्यासेवि नियोगः। (१)ओंयातेरुद्र शिवातनूरघोरा० शिखायां१ असिन्म-
हती त्वस्यपरमेष्ठो अनुष्टुप् वज्ररुद्रोदेवता शिरोन्यासे० । (२) असिमन्महत्त्यर्णवे० शिरसि २ । असं-
ख्यातेति परमेष्ठो अनुष्टुप्छन्दः वहवोरु० ललाटन्यासे० (३) ओंअसंख्याता० ३ ॥ त्र्यम्बकमित्य-
नयोः क्रमेणवसिष्ठ प्रजापती अनुष्टुप् त्र्यम्बकोंनेत्रन्यासे० (४) ओंत्र्यम्बकंय० २ ॥ नेत्रयो० ४ ॥
मानस्तोकइतिकुत्स० जगती०एकोरुद्रो०नासिकान्यासे० (५) मानस्तोके०नासिकायां ५ ॥ अवतत्त्ये-
त्यस्य परमेष्ठो अनुष्टुप् एकोरुद्रो० मुखन्यासे० (६) ओंअवतत्य० मुखे ६ ॥ नीलग्रीवाइतिद्वयोः पर-
मेष्टी अनुष्टुप्त्रहवोरु० कंठन्यासे० (७) ओंनीलग्रीवाः शि २॥ कण्ठे ७ ॥ नमस्त आयुधायेतत्रस्यपरमे

(१) १६।२। (२) १६।५५। (३) १६।५४। (४) ३।६०। (५) १६।१६।
(६) १६।१६। (७) १६।५३।

ष्टीअनुष्टप्एकोरु० प्रकोष्ठन्यासे० (१) ओंनमस्तआयु० प्रकोष्टयोः ८ ॥ मणिवन्धा दूर्ध्वं कूर्परादधो-
ह० भागः प्रकोष्ठः। येतीर्थानीति परमेष्टी अनुष्टुप् वह्वोरुद्रा० हस्तन्यासे. (२) ओं येतीर्थानि.
म० हस्तयोः ९ ॥ नमोवः किरिकेभ्य इति परमेष्टी० साम्नोष्णिक् यजुरुष्णिगतिछन्दांसि वह्वोरुद्रा०
रु० हृदयन्यासे० (३ ओंनमोवः कि० हृदये १० ॥ नमोहिरण्यबाहव इतिपरमेष्ठी. अत्रैकादशाक्ष-
प० राणां यजुस्त्रिष्टुप् अष्टाक्षराणां यजुरनुष्टुप् दशाक्षरस्य यजुः पंक्तिः हिरण्यवाह्वादयोमन्त्रवर्णा-
६१ वगता उभयतोनमस्कारा वह्वोरु०नाभिन्यासे० (४) ओंनमोहिरण्यवाहवे० पुष्टानांपतयेनमः नाभौ
११ ॥ इमारुद्रायेति कुत्स० जगती० एकोरुद्रोदेवता० गुह्यन्यासे० (५) ओंइमारुद्राय० गुह्ये १२ ॥ शिवम्
मानोमहान्त मितिकुत्स० जगती० एकोरु० ऊरुन्यासे०। (६) ओंमानोमहान्त० ऊर्वोः १३ ॥ ६१

---

(१) १६ । १४ । (२) १६ । ६१ । [illegible] ५, १६ । ४८ । ६, १६ । १५ ।

एषतइत्यस्यप्रजापति सामपंक्ति यंजुर्जगतीछंदः रुद्रो० ऊरुन्यासे० (१) ओंएषतेरुद्रभागः० जान्वोः १४ ॥ अवरुद्रमित्यस्यप्रजापति० पंक्ति० रुद्रो० जंघान्यासे० ओंअवरुद्रम० जंघयोः १५ ॥ जानुगुल्फयोरन्तरालंजंघा। अध्यवोच दित्यस्यपरमेष्ठी० पंक्तिश्छन्दः० एकोरुद्रो० कवचन्यासे० (२)ओंअध्यवोचद० कवचमुद्रयाकवचं १६ ॥ नमोविल्मिन इत्यस्यपरमेष्ठी० षडक्षराणां यजुर्गायत्री पञ्चाक्षरयो दैवीपंक्तिः सप्ताक्षरस्य यजुरुष्णिाक् विल्मिनादयो मन्त्रवर्णावगता अन्यतरतोन-मस्कारावह्वोरुद्रा देवता उपकवचन्यासे० (३) ओंनमोविल्मिने० हनन्यायच। कवचाद्धिपरी-तमुपकवचं। कवचोपरितथैवेत्युपकचमित्यन्ये १७॥ नमोस्तुनीलग्रीवायेत्यस्यपरमेष्ठीअनुष्टुप्० एकोरुद्रो० तृतीयनेत्रन्यासे० (४) ओंनमोस्तुनीलग्री० मुष्टितोविमुक्तयामध्यमया तृतीयनेत्रे १८ ॥

१, ३।५७। २, १६।५। ३, १६।३५। ४, १६।८।

प्रमुञ्चे त्यसप्रपरमेष्टी॰ अनुष्टुप्॰ एकोरुद्रे ॰ अस्त्रन्यासे॰ (१) ओंप्रमुञ्चध॰ अस्त्रं १९॥ यएतावंतश्चे-
त्यस्य परमेष्ठो॰ अनुष्टुप् वहवोरुद्रा॰ दिग्वंधने॰ (२) ओंयएतावन्त श्च॰ दिक्षुविदिक्षुच परस्प-
रन्तर्जंज्यंगुष्टाग्रस्फोटनेन दिग्वन्धः २० ॥ इतिशिखाद्यस्त्रांतो दिग्वन्धसहित एकोनविंशतिविधो-
द्वितीयः । दशाक्षरमन्त्रस्यप्रजापति॰ विराट्रुद्रो॰ न्यासे॰ । ओंनमोमूर्द्धनि । ओंनंनमः शिखा-
यां । ओंमोंनमोललाटे । ओंभंनमोमुखे॰ ओंगंनमः कण्ठे । ओंवंनमः हृदये॰ ओंतेंनमः
दक्षिणहस्ते ओंरुंनमः वामहस्ते । ओंद्रांनमः नाभौ । यन्नमः पादयोः । इति रुद्रगाय-
त्रीन्यासस्तृतीयः । संपुटाख्यः । सचमुद्रितांजलिना प्राच्यादिदिक्षु वक्ष्यमाणमन्त्रैः कार्यः ।
तद्यथा । त्रातारमित्यस्य गर्गस्त्रिष्टुप् इन्द्रःसंपुटीकरणेविनियोगः । (३) त्रातारमिन्द्र॰प्राच्यां त्वन्नो-



१, १९।८। २, १६।६३। ३, २०।५०।

अग्नइत्यस्य हिरण्यस्तुपआङ्गिरसस्त्रिष्टुप् अग्निःसं०(१) ओंत्वन्नोऽअग्ने० अग्नेयाम् । सुगन्नुपन्थामि-त्यस्य प्रजापतिस्त्रिष्टुप् यमःसं०(२)ओंसुगन्नुपन्थां०दक्षिणस्याम् । असुन्वन्तमित्यस्य प्रजापतिस्त्रिष्टु-प् निर्ऋतिःसं० (३) असुन्वन्त० नैर्ऋत्याम् । तत्वायामीत्यस्य शुनःशेपस्त्रिष्टुप् वरुणःसं० (४) ओं तत्वायामि० प्रतीच्यां । आनोनियुद्भिरित्यस्य वसिष्ठस्त्रिष्टुप् वायुःसं० (५) ओं आनोनियु०वायव्यां । वयठँ० सोमेत्यस्य वन्धुर्गायत्रीसोमः० (६ ओं वयठँ० सोम० उदीच्यां । तमीशानमित्यस्य गौतमो-जगतीईशानःसं०(७)ओंतमीशानं०ईशान्यां । अस्मे रुद्राइत्यस्यप्रगर्थस्त्रिष्टुप् ब्रह्मासं० (८) ओंअस्मे-रुद्रा० ऊर्ध्वायाम् । स्योनापृथिवीत्यस्य मेधातिथिर्गायत्रीअनन्तःसं० (९)ओंस्योनापृथिवी०इत्यधः ।

---

१, ३४ । १३ । २, १ । ५ गृह्यसूत्राङ्क । ३, १ । १२ । ४, ६१ । २१ । ५, २७ । ३२ । ६, ३ । ५४ । २ ।
७, २५ । ११ । ८, ३३ । ५० । ९, ३६ । १३ ।

अथ पुनस्त्रातारमिन्द्रमित्यादिभि र्मन्त्रैर्ध्यादिस्मरणपूर्वकं दिक्षुविदिक्षुच इन्द्रायनम इत्येवमि-
इ० न्द्रादीन्प्रणमेत् । इतिसंपुटाख्यश्चतुर्थः । यज्जाग्रतइतिषडृचस्य शिवसंकल्पऋ० त्रिष्टुप्० मनो०
म० हृदयन्यासे० (१) ओंयज्जाग्रतो० हृदयायनमइति मुष्टिविनिर्गतांगुष्ठौसंयुक्तौकृत्वा हृदयेन्यसेत् ।
रु० सहस्रशीर्षेतिषोडशर्चस्य पुरुषसूक्तस्यनारायणऋषिः आद्यानाम्पञ्चदशानांअनुष्टुप् यज्ञेनयज्ञमि-
प० त्यस्यत्रिष्टुप् जगद्बीजंपुरुषोदेवता शिरोन्यासे० (२) ओंसहस्रशीर्षा० शिरसेस्वाहाइति मुष्टिनिर्गतांगुष्ठौ
६२ संयुक्तौ न्यस्ततर्जनीकौकृत्वा शिरसिन्यसेत् अद्भ्यःसम्भृतइति षडृचस्योत्तरनारायणस्यनारायणपु-
रुषऋषिः आद्यानांतिसृणांत्रिष्टुप् चतुर्थपञ्चमयोरनुष्टुप् षष्ठस्यत्रिष्टुप् आदित्योदेवताशिखान्या- शिवम
से० ( ३ ) ओं अद्भ्यःसंभृ० शिखायैवषट्इति मुष्टिपुटौकरौकृत्वा अंगुष्ठावधःप्रसक्ताग्रेकनिष्ठेचोर्ध्वंतः ६२

१ ३४।१। २ ३१।१। ३ ३१।१७।

कृत्वाशिखायांन्यसेत् । आशुःशिशानइतिद्वादशानां वासप्तदशानामितिकर्काचार्यः । अप्रतिरथऋ-षिस् त्रिष्टुप्इन्द्रः कवचन्यासे० ( १ ) आशुःशिशानो० कवचायहुं इत्यङ्गुष्ठौप्रसक्ततर्जन्यौच त्रिकोण-वत्कृत्वा मूर्द्ध्निपश्चान्मुखंक्रतोभयपार्श्वतः करौहृदयन्तंनयन् कवचंन्यसेत् । विभ्राडितिसप्तदशानां विभ्राट्ऋषिः जगती० सूर्यो० नेत्रन्यासे० ( २ ) ओंविभ्राट्बृह० नेत्रत्रयायवौषडितिनेत्रोन्मुखंहृ-स्तङ्कृत्वा प्रसक्तमङ्गुष्ठङ्कनिष्ठिकाञ्चकृत्वा मध्यमांकिञ्चित्प्रसार्य इतराङ्गुलीर्नमयन् नेत्रेषुन्यसेत् । नमस्तेइत्यादिषोडशर्चस्य परमेष्ठीऋषिः नमस्तइत्यस्यगायत्री यातइतितिसृणां अनुष्टुप् अध्यवोच-दितित्रयाणांपङ्क्तिः नमोस्त्वितिसप्तानांअनुष्टुप् मानइतिद्वयोःकुत्सः जगती० सर्वासामेकोरुद्रो० अस्त्रन्यासे० ( ३ ) ओंनमस्ते० हवामहेइति किञ्चित्तर्जनीम्प्रसार्य मध्यमाङ्गुष्ठयोगेन अस्त्रायफ-

१, १७।३२।     २, ३३।     ३, १६।१।

डित्यर्त्तुं । इतिहृत्षडङ्गःपञ्चमः । (१) ततएषतेरुद्रभाग इतियोनिमुद्राप्रदर्शनम् । एवम्प-
न्वाङ्गन्यासान्विधाय । ऋष्यादिस्मरणपूर्वकं सावधानामहारुद्रंध्यायन्तो मृगीमुद्रयाजुहुयुः ।
तद्यथा । यज्जाग्रतइति षरणांशिवसङ्कल्प० त्रिष्टुप्० मनो० महारुद्रप्रीत्यर्थम् होमेवि० । (२)
ओं यज्जाग्रतो० इतिषडर्चेन प्रणवान्विस्वाहान्तेनै कामाहुतिम् । सहस्रशीर्षेतिषोडशर्चस्य पुरु-
षसूक्तस्य नारायणपुरुषऋषि० आद्यानांपञ्चदशानांअनुष्टुप् षोडश्यास्त्रिष्टुप् जगद्वीजंपुरुषोदेवता
महारुद्रप्री० होमे० (३) ओंसहस्रशीर्षा० इतिषोडशर्चेन प्रणवादिकेन स्वाहान्तेन पुरुषसूक्ते-
नैकामाहुतिं० । अद्भ्यःसम्भृतइति षरणांनारायणःपुरुषऋ० आद्यानान्तिसृणान्त्रिष्टुप् द्वयोरनु-
ष्टुप् अन्त्यायास्त्रिष्टुप् आदित्योदे० महारुद्रप्री० होमे० (४) ओंअद्भ्यःसंभृ० इतिषडर्चेन:





१, ३।५६। २. ३४।१। ३. ३१।१। ४, ३१।१७।

स्वाहान्तेनोत्तरनारायणेनै कामाहुतिम् । आशुःशिशानइति द्वादशानांवा सप्तदशचॅनैतिकर्वं: । अप्रतिरथऋ० त्रिष्टुप्० इन्द्रः महारुद्रप्रीत्यर्थं होमेविनियोगः (१) ओं आशुःशिशानइति द्वादश-र्चेन वासप्तदशर्चेन प्रणवादिकेन स्वाहान्तेनाप्रतिरथेनै कामाहुतिन्० । विभ्राडित्यादिसप्तदशानां विभ्राडऋ० जगती० सूर्यो० महारुद्रप्री० होमे० (१) ओंविभ्राड्० । सप्तदशर्चेन प्रणवादिकेन एकामाहुतिं० एवम्पञ्चाङ्गमन्त्रैःपञ्चाहुतीर्हुत्वा ततःप्रधानभूतेनरौद्राध्यायेन अनन्तमतमन्त्रवि-भागपक्षेण होमः । नमस्तइतिरौद्राध्यायस्य परमेष्ठीऋ० देवाऋषयः नमस्तइत्यस्य गायत्री० यातइतितिसृणां अनुष्टुप् अध्यवोचदितितिसृणांपंक्तिः नमोस्तुनीलग्रीवायेत्यादिसप्तानां अनु-ष्टुप् मानोमहान्तइति द्वयोःकुत्सऋ० जगती० सर्वासामेकोरुद्रोदे० हिरण्यबा हवइत्यादीनां

---

१ १७।२२। २ २२।३०।

श्वभ्यःश्वपतिभ्यश्चवोनमइत्यन्तानां यजुषांहिरण्यबाहुः सेनानीदिशांपतिरित्यादिमन्त्रावगतादेवता उभयतोनमस्कारा बहवोरुद्रादेवताः नमोभवायचरुद्रायचेत्यन्तानां यजुषां भवादयोमन्त्रलिङ्गावगता अन्यतरतोनमस्कारा बहवोरुद्रादेवताः नमइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमइतियजुषः उभयतोनमस्काराबहवोरुद्रादे॰ तचनमोहिरण्यबाहव इत्यादयोद्वन्द्विनोरुद्राः । नमःसभाभ्यइत्यादयोजातसंज्ञकारुद्राः नमोवःकिरिकेभ्यइत्यादीनां अग्निर्वायुःसूर्योहृदयभूतव्याहृतीनां अन्यतरतोनमस्कारा बहवोरुद्राः द्रापेइत्यस्या उपरिष्टाद्बृहती इमारुद्रायेत्यस्याः कुत्सोपिजगती । यातेरुद्रेत्यस्या अनुष्टुप् परिनोमिढुष्टमेति द्वयोस्त्रिष्टुप् विकिरिद्रसहस्राणीति द्वयोरनुष्टुप् समानामेकारुद्रादेवता असंख्यातेत्यादीनां दशानामनुष्टुप् बहवोरुद्रादेवता नमोस्तुरुद्रेभ्य इत्यादीनांत्रयाणां यजुषां धृतिश्छन्दः बहवोरुद्रादेवता महारुद्रो होमोविनियोगः इतिस्मृत्वा । अथ-

* ॐनमस्ते रुद्रमन्यवऽउतोतऽइषवेनमः । बाहुभ्यामुततेनमःस्वाहा: १ ॥ ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी । तया-

एकषष्ठ्युत्तरशतधा मन्त्रविभागउच्यते ॥ ओंनमस्तेरुद्रमन्यव इत्यादिभिः षोडशर्ग्भिः स्वाहा-
कारान्ताभिः षोडशाहुतयः १६ ॥ ओंनमोहिरण्यबाहवे सेनान्ये दिशाञ्चपतयेनमः स्वाहा
ओंनमोवृक्षेभ्यो हरिकेशेभ्यः पशूनांपतयेनमःस्वाहा इत्येवमादिभिः उभयतोनमस्कारैः पञ्च-
चत्वारिंशद्भिर्यजुर्भिः पञ्चचत्वारिंशदाहुतयः ४५ ॥ ओंनमोभवायच रुद्रायचस्वाहाओंनमःश-
र्वायच पशुपतयेचस्वाहा इत्येवमादिभि रन्यत्तरतो नमस्कारैः पञ्चसप्तत्याहुतयः ७५ ॥ ओं
नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्चवोनमःस्वाहा इत्युभयतोनमस्कारेण यजुषाचैकाहुतिः १ ॥ ओं
नमोवःकिरिकेभ्यो देवानाᳬं हृदयेभ्यःस्वाहा ओंनमोविचिन्वत्केभ्यो देवानाᳬं हृदयेभ्यः स्वाहा

नस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहिस्वाहा २ ॥ ॐ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे । शिवाङ्गिरित्रताङ्कुरुमाहिᳬसीःपुरु-

* अथ एकषष्ठ्युत्तरशतधामन्त्रविभागक्रममाह ।

षज्जगत् स्वाहा ३ ॥ ॐ दिवेनव्वचमा। त्वागिरिशाच्छाव्वदामसि। यथान:सर्व्वमिज्जागदयक्ष्मठं०सुमनाऽअसत् स्वाहा ४ ॥

ओंनमोऽविचित्तिशान्केभ्यो देवानाठं० हृदयेभ्यः स्वाहा ॥ ओंनमऽआनिर्हतेभ्यो देवानाठं० हृद-
येभ्यः स्वाहा इत्यनयतरतोनमस्कारै श्चतुर्भिर्यजुर्भि स्नतस्त्रआहुतयः ४ ॥ द्रापेअन्धसस्पत इत्या-
दिभिर्विंशतिकण्डिकान्ताभि र्विंशत्याहुतयः २० ॥ पूर्वाभिःसहैकषष्ट्युत्तरशतमाहुत्याभवन्ति १६१ ॥
एवमेकषष्ट्युत्तरशतधामंत्रविभागेन दशकृत्वोरौद्राध्यायेनहुत्वा ॥ पुनर्यज्जाग्रत इत्यादिभिर्विभ्राडि-
त्यनुवाकान्तैः पञ्चभिरङ्गमन्त्रैः पूर्ववत्पञ्चाहुतीर्जुहुयात् । तत एकादत्या रौद्राध्यायेन पूर्वव-
त्हुत्वा । वयठं०सोमेत्यष्टकण्डिकात्मकेन महच्छिरसा एकामाहुतिं जुहुयात् । वयठं०सो-
मेत्यस्य वन्धुऋ० गायत्री० एषतदृत्यनयोः प्रतिपत्तिऋ० साम पङ्क्ति र्यजु र्जगती छन्दांसि

ऋ० म० रु० प० ६६ | शिवम् ६६

ओंअद्ध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् । अहींश्चसर्व्वाञ्जम्भयन्त्सर्व्वाश्चयातुधान्योधराचीःपरासुव स्वाहा ५ ॥ ॐ असौयस्ता-

स्नात्रोऽअतण्ऽउतबभ्रुः सुमङ्गलः। येचैनठं॰रुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषाठं॰हेडऽईमहेस्वाहा ।६। ओंअसौयोवसर्पति-

रुद्रो॰ अत्ररुद्रमित्यस्य प्रजापतिऋ॰ सामपङ्क्तिश्छं॰ रुद्रोदे॰ भेषजमित्यस्य प्रजापतिऋ॰ ककुप् छन्दः रुद्रोदे॰ त्र्यम्बकमित्यनयोःक्रमेणवसिष्ठप्रजापतिऋ॰ अनुष्टुप्छन्दः त्र्यम्बकोरुद्रोदे॰ एतत्तद्दृत्यस्यप्रजापतिऋ॰ आस्तारपंक्तिः रुद्रोदे॰ त्र्यायुषमित्यस्य नारायणऋ॰ उष्णिक् आशीदे॰ शिवोनामेत्यस्य प्रजापतिप्रजापत्याबृहती॰ रुद्रोदे॰निवर्तयामीत्यस्य प्रजापति॰ प्रजापत्यात्रिष्टुप् लिङ्गोक्तादे॰ महारुद्रप्रीतये होमेविनियोगः। (१) ओंवयठं॰ सोम॰ सुवीर्यायस्वाहा। ऋचंवाचमिति चतुर्विंशतिमन्त्राणाम् प्रजापतिऋ गायत्रीछं॰ विष्णुर्देवता शान्त्यर्थं होमे विनियोगः। (२) ओं ऋचंवाचमित्यादिभिः शान्त्यध्यायमन्त्रैः प्रतिमन्त्रञ्चतुर्विंशतिराहुती र्जुहुयात्। चमकाहुतिपक्षे तु

(१) ३।५६। (२) ३६।१।

नीलग्रीवोव्विलोहितः । उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नु दहार्यः सदृष्टोमृडयातिनः स्वाहा ७ ॐ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे ।

---

ह० यज्ञाग्रतइत्यादिभिः पञ्चाङ्गमन्त्रैः पञ्चाहुतीर्हुत्वा ततोरौद्राध्यायेन पूर्वोक्तप्रकारेणहुत्वा होमा-
म० न्तेच एकैकेन चमकविभागेनहुत्वा शान्त्यध्यायमन्त्रै श्चतुर्विंशतिराहुती र्जुहुयादिति । चमक-
रु० विभागस्तु । (१) वाजश्चेतिचतस्रः ४ ॥ (२) सत्यञ्चेतिचतस्रः ४ ॥ (३) ऊर्क् चेतिचतस्रः ४ ॥
प० (४) अश्माचेतिस्रः ३ ॥ (५) अग्निश्चेतितिस्रः ३ ॥ (६) अꣳशुश्चेतितिस्रः ३ ॥
६७ (७) अग्निश्चमेघर्मश्चमइति द्वे २ ॥ (८) एकाचेतित्येका १ ॥ (९) चतस्रश्चेत्येका १ ॥ शिवम्
(१०) त्र्यविश्चेतिद्वे २ ॥ (११) वाजायस्वाहेति द्वे २॥ इति चमकविभागः । एषरुद्रहोमः एवंक्रमेण ६७

---

(१) १८।१। (२) १८।५। (३) १८।९। ४, १८।१३। ५, १८।१६। (६) १८।१९।
(७) १८।२२। (८) १८।२४। (९) १८।२५। (१०) १८।२६। ११, १८।२८।

अथोयेऽअस्य सत्वानोहन्तेभ्योकरन्नमः स्वाहा । ८ ।  प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्चतेहस्तऽइषवः पराताभगवो-

लघुरुद्र होमं महारुद्र मंतिरुद्र होमं वाकुर्युः । इत्येकषष्ट्युत्तरशतधा मन्त्रविभागसंख्यया होमउक्तः । एकधा त्रेधा इत्यादिमन्त्रविभागसंख्यात्वनन्तदेवकृत रुद्रकल्पद्रुमे द्रष्टव्याः । प्रधानहोमेक्रियमाणे जापकाजपेयुः । अथ द्वारपालजपा न्यभिधीयन्ते । तत्र पूर्वद्वारे श्रीसूक्तम् पावमानञ्च सोमसूक्तम् सुमङ्गलम् । शान्त्यध्यायं चेन्द्रसूक्तम् राक्षोघ्नञ्चेतिवह्वृचौ । श्रीसूक्तम् । हिरण्यवर्णांहरिणी मित्यादि पञ्चदशर्चम् । पावमानम् । स्वादिष्टयेत्यादि । सोमसूक्तम् । सोममावहयेत्यादि । सुमङ्गलम् । कनिक्रदज्जनुषमित्यादि । शान्त्यध्यायम् । शन्नइन्द्राग्नीत्यादि वर्गत्रयम् । इन्द्रसूक्तम् । योजातएवेत्यादि । राक्षोघ्नम् । कृणुष्वपाजइत्यादि । दक्षिणद्वारे ।

व्यपस्वाहा । ९ । ओं विज्यन्धनुः । कपर्दिनोविशल्योवाणवा^२ । उत । अनेशन्नस्ययोऽइषवऽआभुरस्यनिषङ्गधिः स्वाहा

---

दक्षिणेतु द्वारपालौ रुद्रान्पुरुषसूक्तकम् । श्लोकाध्यायं शुक्रियञ्च मण्डलाध्यायमेवच । (१) रुद्रान्नमस्तेरुद्रमन्यव इत्यध्यायः । पुरुषसूक्तम् । (२) सहस्रशीर्षेत्याषोडशर्चम् । श्लोकाध्यायम् । देवसवितःप्रसुवयज्ञमिति त्रिंशतमोध्यायः । शुक्रियम् । (३) ऋचम्वाचमित्यध्यायः । मण्डलाध्यायम् । (४) यदेतन्मण्डलन्तपतीत्यादि मण्डलब्राह्मणम् । पश्चिमद्वारे वामदेव्यम् बृहत्साम-ज्येष्ठसाम रथन्तरम् । तथापुरुषसूक्तञ्च रुद्रमूक्त मतःपरम् । आज्यदोहानिसामानि शान्तिकाध्यायमेवच । भारुण्डानिच सामानि पश्चिमेसामगौ स्मृतौ । वामदेव्यम् । कयानश्चित्रआभुवदूतीसदावृधः सखा इत्यृचिगीतम् । बृहत्साम । त्वामिद्धिहवामह इत्यस्यांगीतम । पुरुषसूक्तम् । सहस्र शीर्षापुरुष इत्येतासुगीतम् ।

---

१. १६ । १ । अध्यायपर्यन्तम् । २, ३१ । षोडशर्चम् । ३, ३६ । अध्यायपर्यन्तम्पठेत् । ४, शतपथेप्रसिद्धम् ।

। १० । ओं यातेहेतिर्म्मीढुष्टमहस्ते बभूवतेधनुः । तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुजस्वाहा । ११ । ओं परिते धन्वनोहेतिर-

रुद्रसूक्तम् । अथोराजानमिति वर्गद्वयम रुद्रसंहिताख्यम् । आज्यदोहानि । देवव्रतौनेत्येतानि । शान्तिकाध्यायम अथोधग्निरित्यादि भारुण्डानि । इमंस्तोममित्याद्यृत्तुगीतानि । अथवा अग्नआयाह्य यैन्द्राय सामगाय तवैजपेत् । कस्यनूनञ्चगायन्ति स्वादिष्ठयाचपश्चिमे । उत्तरद्वारे । अथर्वाङ्गिरसम् नीलरुद्रञ्चैवापराजितम् । देवीञ्च मधुसूक्तञ्च रोधसम् शान्तिकम् तथा । अथर्वाणौ द्वारपालौ जपेता मुत्तरेस्थितौ । अथर्वं । छन्दोगाय इन्द्रन्नायेत्यादि । आङ्गिरसम् । अङ्गिरसजमानीत्यादि । नीलरुद्रम् । आसुद्रयतेष्वित्यादि । अपराजितम् । देवपरिवर्त्मनीत्यादि मधुसूक्तम् । मधुव्वाताऋतायतइत्यादि । रोधसं । अभयंद्यावापृथिवीइत्यादि । शान्तिकं । शन्नइन्द्राग्नीत्यादि । एवंप्रधानहोमम्विधाय सर्वैऋत्विजः

स्मान्दृणक्तु विख्तः । अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् स्वाहा ।१२। ओं अवतत्यधनु ष्टुंठं०सहस्राक्षशतेषुधे ।

ह० प्रागुक्तपञ्चाङ्गन्यासान्वा कुर्युः । तत आचार्यो रुद्रपीठस्थ पञ्चावर्णदेवतानाम् मूलप्रकृत्यादि
म० पीठदेवतानाम् ब्रह्मादिलिङ्गतोभद्र देवतानाञ्च नाममन्त्रैः एकैकामाज्याहुतिञ्जुहुयात् ।
रु० ओं नमोभगवते रुद्रायनमःस्वाहा । एवंसर्वत्र । नाममन्त्र लक्षणन्तु प्रागुक्तमेव । ओंसद्योजातायनमः
प० ओंवामदेवायनमः । ओंअघोरायनमः । ओंसूक्ष्मायनमः । ओंतत्पुरुषायनमः । ओंईशानायनमः
६८ ओंनन्दिनेनमः । ओंमहाकालायनमः । ओंगणेशायनमः । भृङ्गिरिटयेनमः । ओंस्कन्दायनमः । शिवम्
ओंउमायैनमः । ओंचण्डीश्वरायनमः । ओंअनन्तायनमः । ओंसूक्ष्मायनमः । ओंशिवायनमः । ओं ६८
एकपदेनमः । ओं एकरुद्रायनमः । ओं त्रिमूर्त्तयेनमः । ओं श्रीकण्ठायनमः । ओं वामदेवायनमः ।
ओं ज्येष्ठायनमः । ओं श्रेष्ठायनमः । ओं रुद्रायनमः । ओं कालायनमः । ओं कलविकरणायनमः ।

निशीर्थंगत्वा नाम्मुखाशिवोन: सुमनाभवखाहा ।१३। औं नमस्तऽआयुधायानाततायधृष्णवे । उभाभ्यामुततेनमोबाहु-

ओं वलायनमः । ओं वलविकरणायनमः। ओं वलप्रमथनामः । ओं अणिम्ने नमः। ओं महिम्ने नमः। ओं लघिम्ने नमः । ओं गरिम्णेनमः । ओं प्राप्त्यै नमः । ओं प्राकाम्यैनमः । ओं ईशित्वायनमः । ओं वशित्वायनमः । ओं ब्राह्मौनमः । ओं माहेश्वर्य्यैनमः । ओंवैष्णव्यैनमः । ओं वाराह्यै नमः । ओं ऐन्द्र्यै नमः । ओं चा मुण्डायैनमः । ओं असितांगभैरवायनमः । ओं रुरुभैरवानमः । ओं चण्डभैरवायनमः । ओं क्रोधभैरवायनमः। ओं उन्मत्तभैरवायनमः। ओं कालभैरवाय नमः। ओं भीषणभैरवायनमः । ओं संहारभैरवाय नमः । ओं भवायनमः। ओं शर्वा यनमः। ओं ईशानायनमः। ओं पशुपतयेनमः। ओं रुद्रायनमः। ओं उग्रायनमः। ओं भीमा यनमः। ओं महतेनमः। ओं अनन्तायनमः। ओं वासुकयेनमः । ओं ओं तक्षकायनमः। ओं कुलीरायनमः । ओं कर्कोटकायनमः । ओं शङ्खपालायनमः । ओं कम्वलायलमः ।

ह० ओं अश्वतरायनमः । ओं वैन्यायनमः । ओं पृथवेनमः । ओं हैहयायनमः । ओंअर्जुनायनमः ।
म० ओं शाकुन्तलेयायनमः । ओं भरतायनमः । ओंनलायनमः । ओं रामायनमः । ओंहिमवतेनमः ।
रु० ओं निषधायनमः । ओं विन्ध्यायनमः।ओं माल्यवतेनमः । ओं पारिपात्रायनमः । ओं हेमकूटायनमः
प० ओं गन्धमानायनमः।ओं इन्द्रायनमः। ओं अग्नयेनमः। ओं निर्ऋतयेनमः। ओं वरुणायनमः । ओं वायवे
७० नमः । ओंसोमायनमः । ओंईशानायनमः । ओंशच्यैनमः । ओं स्वाहायैनमः। ओं वाराह्यै नमः। ओंख-
ड्गिन्यैनमः । ओं वारुण्यैनमः । ओं वायव्यैनमः । ओं कौवेर्य्यैनमः । ओं वज्रायनमः । ओं शक्त्यैनमः ।
ओं दण्डायनमः । ओं खड्गायनमः । ओं पाशायनमः । ओं अङ्कुशायनमः । ओं गदायैनमः । ओं-
त्रिशूलायनमः । ओं ऐरावतायनमः । ओं मेषायनमः । ओं महिषायनमः । ओं प्रेतायनमः । ओं

स्मोतमातरम्मान: प्रियास्त्वोरुद्ररोरिष: स्वाहा। १५। ओं मानस्तोके। तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिष:।

मकरायनम:। ओं व्हगायनम:। ओं नरायनम:। वृषभायनम:। ऐरावतायनम:। पुंडरीकाय नम:। वामनायनम:। कुमुदायनम:। अञ्जनायनम:। पुष्पदन्तायनम:। सार्वभौमायनम:। सुप्रतीकायनम:। इंद्रायनम:। अग्नयेनम:। यमायनम:। निर्ऋतयेनम:। वरुणायनम:। वायवेनम:। कुबेरायनम:। ईशान्यायनम:। विरूपाक्षायनम:। विश्वरूपायनम:। पशुपतयेनम:। उर्ध्वलिङ्गायनम:। शेषायनम:। तक्षकायनम:। अनन्तायनम:। वासुकयेनम:। शङ्खपालायनम:। पद्मायनम:। कम्बलायनम:। कर्कोटकायनम:। इतिरुद्रपीठदेवता:। मूलप्रकृत्यैनम:। आधारशक्त्यैनम:। कूर्मायनम:। अनन्तायनम:। वाराहायनम:। पृथिव्यैनम:। रत्नमण्डपायनम:। कल्पवृक्षेभ्योनम:। सुवर्णवेदीकायैनम:। रत्नसिंहासनायनम:। धर्मायनम:। ज्ञानायनम:। वैराग्याय-

मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वाहवामहे स्वाहा । १६ । ओं नमोहिरण्यबाहवे सेनान्ये दिशाञ्चपतये-

ह० म० रु० प० ७१ नमः । ऐश्वर्य्यायनमः । अधर्मायनमः । अज्ञान.यनमः । अवैराग्यायनमः । अनैश्वर्यायनमः । तल्पाकारायानन्तायनमः । पद्मायनमः । अनन्दकन्दायनमः । संविन्नालायनमः । पत्रेभ्योनमः । कर्णिकायैनमः । सत्वायनमः । रजसेनमः । अर्कमण्डलायनमः सोममण्डलायनमः । वह्निमण्डलायनमः । ब्रह्मणेनमः । विष्णवेनमः । रुद्रायनमः । अन्तरात्मनेनमः । आत्मनेनमः । ज्ञानात्मनेनमः । परमात्मनेनमः । वामायैनमः । ज्येष्ठायैनमः । श्रेष्ठायैनमः । रौद्र्यैनमः । काल्यैनमः । कलविकरण्यैनमः । शिवम् ७१

वलविकरण्यैनमः । वलप्रमथिन्यैनमः । सर्वभूतदमिन्यैनमः । मनोन्मन्यैनमः। इत्याधारपीठदेवताः । ब्रह्मणेनमः सोमाय॰। इशान्याय॰। इन्द्राय॰। अग्नये॰। यमाय॰। निर्ऋतये॰ । वरुणा॰ । वायवे॰ । अष्टवसुभ्यो॰ । एकादशरुद्रेभ्यो॰ । द्वादशादित्येभ्यो॰ अश्विभ्यां॰ । सपैटकविश्वेभ्योदेवेभ्यो॰ ।

नमः स्वाहा। १७। ओंनमोहचेभ्योहरिकेशेभ्यः पशूनाम्पतयेनमः स्वाहा। १८। ओं नमःशष्पिञ्जरायत्विषीमतेपथीनाम्पतये-

सप्तयक्षेभ्यो०। भूतनागेभ्यो०। गन्धर्वाप्सरोभ्यो०। स्कन्दाय०। नन्दीश्वराय०। शूलाय०। महाकालाय०। दक्षादिप्रजापतिभ्यो०। दुर्गायै०। विष्णवे०। स्वधायै०। मृत्युरोगेभ्यो०। गणपतये० अद्भ्योनमः मरुद्भ्यो०। पृथिव्यै०। पञ्चनदीभ्यो०। सप्तसागरेभ्यो०। मेरवे० गदायै०। त्रिशूलाय० वज्राय० शक्तये० दण्डाय० खड्गाय० पाशाय०। अङ्कुशाय० गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० वसिष्ठाय० अत्रये० अरुन्धत्यै० ऐन्द्यै० कौमार्य्यै० ब्राह्म्यै० चामुण्डायै० वैष्णव्यै० माहेश्वर्य्यै वैनायक्यै० असितांगभैरवाय० रुरुभै० चण्डभैर० क्रोधभै० उन्मत्तभै० कालभै० भीषणभै० संहारभै० इतिलिङ्गतोभद्रदेवता० होमावसरे यद्यग्नौजीवादिपतति तद्दोषपरिहारार्थम् अनादिष्टप्रायश्चित्तसङ्कार्यम् होमेक्रियमाणे यद्धविः कुण्डाद्बहिः

नमःस्वाहा। १९। ओंनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमः स्वाहा। २०। ओंनमोबभ्लुशाय व्याधिनेन्नानाम्पतयेनमः

ह० पतति। तन्नद्यादौप्रक्षेपणीयं। यथा। ऋत्विजांजुह्वतांयन्तु बहिः पततियद्धविः सर्व्वोयोव-
म० रुणोभागः प्रक्षेप्योविमलेजले इति। तत्राप्युपरिमेखलायां यत्पतित त्तदग्नौप्रक्षिपेत्। कुतः
क० परिधिपरिस्तरणांतर्गतत्वेनाग्नौ प्रक्षेपार्हत्वात्। एवं होमं समाप्यायतनाद्बहि र्वायव्यांदिशि
प० २ (१) अग्नयेतिमन्त्रेण स्वाहास्वधायुतं अग्निंगन्धादिभिः पूजयेत् ततो हविः शेषोत्तरार्द्धात् द्वि-
रवदायहविरभिघार्य ओंअग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धेहोमः। इदमग्नयेस्विष्टकृते नमम श्रिवम
यद्यनेकदिनसाध्यो होमस्तदाद्युषितदोषपरिहारार्थं हविःशेषं घृतमध्ये स्थापयेत्। नष्टेदु- ७२
ष्टेवा हविषि आज्येनैववा होमः। ततोभूः स्वाहेत्यादि प्राजापत्यन्ता नवाहुती र्हुत्वा

(१) ५। ३६।

न्यायतनसमन्ता दिन्द्रादि दिक्पालेभ्यो ग्रहादिभ्यश्च तत्तन्मंत्रैः सदीपमाषभक्तवली न्दत्वा रुद्रपीठस्याग्रे अर्कपर्णे वैणवपात्रे घृतोदनन्निधाय इमारुद्रायेति मन्त्रेण सांगायेत्यादि घृतोद-नवलिं समर्पयेत्। ततोवंशपात्रादौ महावलिं दधिकुङ्कुम रक्ताक्षता दीपमाषताम्बूलदक्षिणा कूष्माण्डोदककुम्भफलयुतंक्षेत्रपालायदद्यात्। सोदकुम्भं सकूष्मांडं क्षेत्रपालवलिंहरेत्। इतिहे-माद्रिः। नहिस्पशमित्यस्य विश्वामित्रस्त्रिष्टुप् क्षेत्रपालोदेवतावलिदानेवि० (१) ओंनहिस्पश० देवाः। क्षेत्रपालाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय भूतप्रेतपिशाचशाकिनीडा-



(१) ३३।६०।

त्तयेवारिवस्कृतायौषधीनाम्पतयेनमः स्वाहा । २६ । ओं नमोमन्त्रिणेव्वाणिजायकक्षाणाम्पतये नमः स्वाहा । २७ । नमऽउ-

क्षु० किनीवेतालपरिवारकूष्माण्डगणसहिताय इमंवलिं समर्पयामि० भोक्षेत्रपाल इमंवलिं गृहाण मम
म० यजमानस्यायुः कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदोभव इत्युक्त्वा श्लोका-
व० न्पठेत् । वलिं गृह्णंत्विमंदेवाआदित्यावसवस्तथा । मारुतश्चाश्विनौरुद्राः सुपर्णापन्नगाग्रहाः ।
प० असुरायातुधानाश्च पिशाचामातृकागणाः । शाकिन्योयक्षवेताला योगिन्यः पूतनाशिवाः
७३ जृम्भकाः सिद्धगन्धर्वा नागाविद्याधरांगनाः । दिक्पालालोकपालाश्च येचविघ्नविनायकाः । जगतः
शान्तिकर्तारो ब्रह्माद्याश्चमहर्षयः । माविघ्नंमाचमेपापं मासंतुपरिपंथिनः । सौम्याभवन्तुतृप्ताश्च शिवस्व
देवभूतगणास्तथा । अनेनं सर्वभौत्तिक वलिदानेन क्षेत्रपालः प्रियतामिति साक्षतञ्जलं ७३

क्षेर्ग्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमः स्वाहा । २८ । ओं नमः कृत्स्नायतया धावतेसत्त्वनाम्पतयेनमः स्वाहा । २९ ।

ओं नमः सहमानायनिव्याधिन ऽआव्याधिनोनाम्पतये नमः स्वाहा । ३० । ओं नमो निषङ्गिणे ककुभायस्ते

भूमौप्रक्षिपेत् । अयंबलिः शूद्रेण दुर्ब्राह्मणेनवा चतुष्पथेनेयः । ततः आचार्यः समाचारा द्धिंकारायस्वाहेत्यादिमन्त्रा न्पठित्वा हस्तौपादौप्रक्षाल्या चम्याग्नेः पश्चादुपविश्य देशकालौसंकीर्त्य अमुकरुद्रस्य संपूर्णतायै पूर्णाहुतिंहोष्य इतिसंकल्प्य। निरुप्याज्यमधिश्रित्य स्रुचं संमृज्योद्वास्यो त्पूयावेक्ष्य स्रुचिद्वादशगृहीतश्चतुर्गृहीतम्वाज्यङ्गृहीत्वा तस्यांवस्त्रवेष्टितन्न।रिकेलादि फलं निधायअधोमुखंस्रुवच्छन्नांस्रुचमादाय यजमानान्वारब्ध आसीन एवपूर्णाहुतिं जुहुयात् । समुद्रा-द्रूर्मिरिति तृचस्य वामदेवऋषि स्त्रिष्टुप् छन्दः यज्ञपुरुषोदेवता मूर्द्धानन्दिवइत्यस्य भरद्वाजऋषिः त्रिष्टप् छन्द अग्निर्देवता पुनस्त्वेत्यस्य प्रजापति ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता पूर्णादर्वीत्यस्य

नानाम्पतये नमः स्वाहा । ३१ । ओं नमो निचेरवेपरिचरायारण्यानाम्पतये नमः स्वाहा । ३२ । ओं नमो व्रजते ।

परिवञ्चतेस्तायूनाम्पतये नमः स्वाहा ।३३। ओं नमो निषङ्गिण ऽइषुधिमतेतस्कराणाम्पतये नमः स्वाहा ।३४।

ऋ० ओंर्णाभ ऋषि अनुष्टुप्छन्दः इन्द्रोदेवता सप्तते अग्नइत्यस्य सप्तऋषिस्त्रिष्टुप्छन्दः अग्नि
म० देवता धामन्तइत्यस्य वामदेवऋषि र्जगती आपोदेवता सर्वेषां पूर्णाहुति होमे विनियोगः।
ऋ० (१) ओं समुद्रादूर्मिं (२) ओंमूर्द्धानन्दि० (३) ओंपुनस्त्वा० (४) पूर्णादर्वि० (५) ओं सप्ततेअग्ने०
य० (६) ओंधामन्तेविश्व० ऊर्मिम् स्वाहा इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्त-
७४ वतेग्नयेद्भ्यश्च नमेतित्यागः। अथवा सप्ततेअग्न इतिमन्त्रेणवा। इदमग्नयेसप्तवतइतित्यागः। शिवम्
मूर्द्धानन्दिव इत्यनेनवा० ३॥ इदमग्नये वैश्वानरायेतित्यागः। समुद्रादूर्मिरिति तृचेनवा ७४

ओंनमः सृकायिभ्योजिघांसद्भ्योमुष्णतांपतयेनमःस्वाहा।३५। ओंनमोसिमद्भ्योनक्तंचरद्भ्योविकृन्तानाम्पतयेनमःस्वाहा।३६।

(१) १७।८९। (२) ३३।८। (३) १२।४४। (४) ३।४८। (५) १७।७९। (६) १७।९९।

ओंनमःउष्णीषिणेगिरिचरायकुलुंचानांपतयेनमःस्वाहा। ३७। ओंनमःइषुमद्भ्योधन्वायिभ्यश्चवोनमःस्वाहा। ३८। ओंनमःआत-

पुनस्त्वेतिवा पूर्णादर्वीत्यनयावा। त्रयाणामिदमग्नय इति त्यागः। ततः फलभूयस्त्वकामो वसोर्द्धाराञ्जुहुयात्। सायथा। वन्हेरुपरि स्तम्भद्वयविधृता मौदुम्बरी स्वच्चौमकोटरां बाहु-प्रमाणा मार्द्रांस्रुचंप्रागग्रान् निधाय तदुपरिच्छिद्रकुम्भं विधृत निर्मलघृत पूरितेन ताम्रमृदादि कुम्भेना धोयव मात्रछिद्रेणाज्यविसृज्ज्वलताग्नेरुपरि वसोर्द्धारां पातयेत्। तस्यांश्च घृतधारायां स्रुक्-प्रणालिकयाग्नौपतत्यां चमकानाग्नेयादि सूक्तानिच श्रावयेत्। श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैन्दवं। महावैश्वानरञ्चैव ज्येष्टसामञ्च पाठयेत्। (१) वाजश्चमेप्र० वेट्स्वाहा।

न्वानेभ्यः प्रतिदधानेभ्यश्चवोनमः स्वाहा। ३९। ओंनमः आयच्छद्भ्योस्यद्भ्यश्चवोनमः स्वाहा। ४०। ओंनमोविसृजद्भ्योव्वि-

(१) १८ अध्यायादितः २९ पर्यन्तम्पठेत्।

ध्यङ्गास्थवोनमः स्वाहा । ४१ । ओंनमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमः स्वाहा । ४२ । ओंनमः शयानेभ्यः आसीनेभ्यश्चवोनमः

ऋ० (१) समास्त्वेतिनवर्चमग्निसूक्तम् । (२) विष्णोर्नुकमिति चतुः कण्डिकात्मकं वैष्णवं सूक्तम् । (३)
म० नमस्तइतिरुद्राध्यायो रौद्रम् । (४) आप्यायस्वसमेतुतइति कण्डिकात्रयात्मक मैन्दवम् । महा-
रु० वैश्वानरसामजोष्टसामचेति । इदमग्नये वाजादिभ्योग्नये त्रिष्णवेरुद्राय सोमाय वैश्वानरायच
प० नममेति तन्त्वेणत्यागः । एवं वसोर्द्धारां विधाय यजमानस्तस्मिन्नेवाग्नौ स्रुचंप्रक्षिप्य रुद्रस्तुतिं
७५ कुर्यात् । नमः सोमाय शान्ताय सगुणायादिहेतवे । निवेदयामिचात्मानं त्वङ्गतिः परमेश्वर ।
नमामित्वां विरूपाक्षनोलग्रीव नमोस्तुते । त्रिनेत्राय नमस्तुभ्य मुमादेहार्द्धधारिणे । त्रिशूल-

स्वाहा । ४३ । ओंनमः स्तिष्ठद्भ्योधावद्भ्यश्चवोनमः स्वाहा । ४४ । ओंनमः सभाभ्यः सभापतिभ्यश्चवोनमः स्वाहा । ४५ । त्रिवम

७५

(१) २७ । १ । (२) ५ । १८ । (३) १६ । (४) १२ । ११२ ।

धारिणेतुभ्यं भूतानाम्पतयेनमः पिनाकिने नमस्तुभ्यं नमोमिढुष्टमायच। नमामि त्वां महा-
भूत पतयेत्वान्नमाम्यहं। स्वयं भिक्षान्नभोक्ताच भक्तानां राज्यदायक। सूर्य्यरूपंसमासाद्य
देहिनान्देहदायक। यतीनांमुक्तिदस्त्वञ्च भूतानांचापिमुक्तिदः राजसेन स्वयं ब्रह्मा सात्वि-
केन स्वयं हरिः। तामसेन स्वयं रुद्रस्त्रितयन् त्वम्यिसंस्थितम्। त्वम् माता त्वं पिता त्वं
वन्धु स्त्वञ्चमेसखा। त्वं विद्या द्रविणः त्वं वै त्वं चसर्वम्ममप्रभो। नमोविरञ्चिविश्वेश
भेदेन परमात्मने। निसर्गस्थिति संहारव्यापिने परमात्मने। न्यूनातिरिक्तम् यत्कर्मजप-
होमार्चनादिकम्। क्षतमज्ञानतो देव तन्मसच्चन्तु मर्हसि। अपराध सहस्राणि क्रियन्ते

पतिभ्यश्चवोनमः स्वाहा । ५० । ओंनमोग्रत्सेपतिभ्यश्चवोनमः स्वाहा । ५१ । ओंनमोविरूपेभ्योविश्वरूभ्यश्चवो नमः

र्निशंमया । दासोहमिति मांमत्वा क्षमस्वपरमेश्वर । अपराधसहस्राणाम् सहस्रमयुतन्तथा
अर्वुदञ्चाप्यसंख्येयम् करुणाब्धे क्षमस्वमे यश्चापराधम् कृतवानज्ञाना त्पुरुषोत्तम । भक्तस्य
ममदेवेश त्वं सर्वं क्षन्तुमर्हसि । अज्ञानादल्पशक्तित्वा दालस्या दुष्टचेतसः । यन्न्यूनमति-
रिक्तं वा तत्सर्वं क्षन्तु मर्हसि । विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव । शरणम्भवभू-
तेश करुणाकर शङ्कर । हरशम्भो महादेव विश्वेशामरवल्लभ । शिवशङ्कर सर्वात्म न्नील-
कण्ठ नमोस्तुते । मृत्युञ्जय महारुद्रसर्वेश शशिशेखर । चन्द्रचूड़ महादेव पार्वतीश
नमोस्तुते । मृत्युञ्जयाय रुद्राय नीलकण्ठायशम्भवे । अमृतेशाय सर्वाय महादेवायतेनमः ।

स्वाहा । ५२ । ओंनमः सेनाभ्यः सेनानिभ्यश्चवोनमः स्वाहा । ५३ । ओंनमोरथिभ्योऽरथेभ्यश्चवोनमः स्वाहा । ५४ ।

ओंनमः चत्रिभ्यः संग्रहीतृभ्यश्चवोनमः स्वाहा। ५५। ओंनमोमहद्भ्यो अर्भकेभ्यश्चवोनमः स्वाहा । ५६। ओंनमः स्वच-

रुद्रहोमे जपोवापि न्यूनोवाप्यधिकोपिवा। संपूर्णस्त्वत्प्रसादेन भूयाद्भूतिविभूषण। इतिस्तुत्वा। अग्निम्प्रदक्षिणीकृत्य। अग्नेः पश्चादुपविश्य त्र्यायुषाणिकरोति भस्मनाललाटे ग्रीवायन्दक्षिणांसे-हृदिचेति त्र्यायुषमिति प्रतिमन्त्रम् ततः संस्रवप्राशनादि प्रणीताविमोकान्तं कुर्य्यात्। ततः आचार्यादय ऋत्विज उदङ्मुखयजमान हस्ते श्रेयः सम्पादनं कुर्युः तद्यथा। शिवाआपः सन्त्विति यजमान हस्ते जलं दद्यात्। सौमनस्य मस्त्विति पुष्पं अक्षतञ्चारिष्टञ्चास्त्वित्यक्षताः दीर्घमायुः। शान्तिः पुष्टिश्चास्त्विति पुनर्जलम्। मयाभवन्नियोगेन होमात्मक प्रभुरुद्राख्ये कर्मणि यत्कृतमाचार्य्यत्वं तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यमहं सम्प्रददइति यजमान हस्ते फलादि

भ्योरथकारेभ्यश्चवोनमः स्वाहा । ५७। ओंनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमः स्वाहा। ५८। ओंनमोनिषादेभ्यः पुञ्जि-

ष्टेभ्यश्ववोनमः स्वाहा। ५९। ओंनमः श्ववनिभ्योमृगयुभ्यश्ववोनमः स्वाहा। ६०। ओंनमः श्वभ्यः श्वपतिभ्यश्ववोनमः



दद्यात्। यजमानः सावित्रेण मन्त्रेण प्रतिगृह्णामीति वदेत्। एवम्ब्रह्मादय ऋत्विजो यथा यथं प्रत्येकंदद्युः। इदं श्रेयः सम्पादनं निर्मूलत्वा द्यजमान प्रतारणमात्र मितिकेचनवदन्ति। तदयुक्तं विधिवाक्य श्रवणात्। तदुक्तं प्रयोगपारिजाते वामनः। आचार्य प्रभृतिभ्यश्च ग्रहार्चनफलन्ततः। समिदाज्यञ्चरूणाञ्चतिलहोमफलन्तथा। तेभ्यो जपफलं तद्वद्गृह्णीयाज्जलपूर्वकम्। ततस्तेभ्यो यथाशक्तिदातव्या दक्षिणाः पृथगिति उक्तत्वात्। ततोग्नेः पश्चिमत उपविष्टो यजमान उदङ्मुखानाचार्यादीन्पूजयित्वा तेभ्योदक्षिणां दद्यात्। दक्षिणाप्युक्ता बौधायनेन। दशगाः सवत्साः स्वर्णभूषिता वृषभैकादशास्तदभावे एकांगांदद्यादित्याह भगवा-



स्वाहा। ६१। ओंनमोभवायचरुद्रायच स्वाहा। ६२। ओंनमः शर्वायचपशुपतयेच स्वाहा। ६३। ओंनमोनी-

र्त्वाधायनः । एतदसंभवेतु । गवामभावे निष्कंस्यात् तदर्द्धं पादमेवचेतिकात्यायनः । निष्कस्तु लोकशास्त्रयो रेकवाक्यतया चत्वारिंशन्माषाः । तदर्द्धं विंशतिस्तदर्द्धं दशतदभावेरजतं । अशक्तौपादार्धमिति । द्वात्रिंशत्पणिकागोव इति अत्यशक्तविषयम् । यद्यपि ऋत्विग्दक्षिणा पृथक् नविहिता तथाप्याचार्यदक्षिणार्द्धं ऋत्विग्भ्योदेयमिति । सर्वत्रऋत्विक् दक्षिणापेक्षया आचार्यापदद्वैगुण्य विधानात् । महारुद्रस्वरूपिणे आचार्याय इदंपाद्यं इदमर्घ्यं इदंवासोयुगल मिदमलङ्करणं एवंगन्ध पुष्प धूपदीप नैवेद्य तांबूलानि दत्त्वाद्यैतत्दमुकरुद्रकर्मणः सम्प्य-र्थ्यमिमाः सवत्सागाः रुद्रदैवत्याः इमांसवत्सागां वा इदंहिरण्यमग्निदैवतं वा इदंरौप्यं चन्द्र-

स्वाहा । ६८ । ओंनमोह्रस्वायचवामनायच स्वाहा । ६९ । ओंनमोवृहतेचवर्षीयसेच स्वाहा । ७० । ओंनमोवृद्धायचसंवृ-

देवतं वा अमुकगोत्रायासुप्रवरायामुकशाखाध्यायिने आचार्याय दक्षिणात्वेन तुभ्यमहं संप्रददे

इतिकुशाक्षतयुतां द्विजहस्ते दद्यान्नममेतिवदेत्। आचार्यस्तु देवस्यत्वेति प्रतिगृह्य स्वस्ती-

त्युक्ता कोदादितिकामस्तुतिं पठेत् यज्ञसाधनभूतायेति पठेत् ततोगोदान सांगताय

दक्षिणां दद्यात् एवंब्रह्मणेष्टषम्। सदस्यायाश्वम्। उपद्रष्ट्रे पूर्णपात्रम् हिरण्यंवा। एतेषामभावे

तन्मौल्यं देयं। ततोद्वारपालादिभ्यो जापकेभ्यो ऋत्विग्भ्यश्च यथाशक्तिसुवर्णान्दक्षिणान् दत्वा

नानागोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च भूयसीं दक्षिणां दद्यात्। ततो ग्रहवेदीसमीपस्थ

कलशोदकं रुद्रकलशोदकं आचारात् द्वारकलशोदकञ्च पात्रान्तरे उद्धृत्य पञ्चपल्लवदूर्वाभि रुद्र-

धेचस्वाहा । ७१ । ओंनमोग्र्यायचप्रथमायच स्वाहा । ७२ । ओंनमआशवेचाजिरायच स्वाहा । ७३ ।

स्वाहा ६८। ओंनमोऽऋस्वायचव्वामनायचस्वाहा ६९। ओंनमोबृहतेचव्वर्षीयसेचस्वाहा ७०। ओंनमोव्वृद्धायचसव्वृधेचस्वाहा ७१।

त्वा आचार्यादयस्त्रिउन्तः भद्रासनोपविष्टम् सकुटुम्बंसपत्नीकम् यजमानमभिषिञ्चेयुः। तत्र-मन्त्राः। (१) आपोहिष्ठेतितिस्रः। (२) त्रातारमिन्द्रमित्येका। इमंमेवरुणेतिपञ्च ५॥ (३) वरुणस्योत्तम्भनमित्येका १॥ (४) भगप्रणेतरित्येका १॥ (५) समुद्रायत्वेत्येका १॥ (६) पुनन्तुमेतिनव ९॥ (७) अप्यायस्वेत्येका (८)॥ पञ्चनद्यइत्येका १॥ (९) शिरोमेश्रीरितिपञ्च ५॥ (१०) देवस्यत्वेतितिस्रः ३॥ (११) समास्त्वेत्येका॥ पालाशम्भवतीतिब्राह्मणमन्त्राः। पौराणमन्त्रास्तु। सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। वासुदेवोजगन्नाथ स्तथासंक-

ओंनमोऽग्र्यायचप्रथमायचस्वाहा ७२। ओंनमः आशवेचाजिरायचस्वाहा ७३। ओंनमः शीघ्र्यायचशीभ्यायच स्वाहा ७४।

(१) ११।५०। (२) २०।५०। (३) ४।३७। (४) ३४।३६। (५) ३८।७। (६) १८।३८।
(७) १२।११२। (८) ३४।११। (९) २०।४। (१०) ९।१८।२०। (११) २७।१।

ह० म० रु० प० ७९

षेणोविभुः १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तुविजयायते । आखण्डलोग्निर्भगवा न्यमोवैनिर्ऋतिस्तथा २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः । ब्रह्मणासहिताः सर्वेदिक्पालाः पान्तुतेसदा ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धाक्रियामतिः । बुद्धिर्लज्जावपुः शान्तिस्तुष्टिःकान्तिश्चमातरः ४ ॥ एतास्त्वामभिषिञ्चन्तुदेवपत्न्यः समागता । आदित्यश्चन्द्रमाभौमो बुधजीवसितार्कजाः ५ ॥ ग्रहास्त्वामभिषिञ्चन्तुराहुः केतुश्चतर्पित्ताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ६ ॥ ऋषयोमनवोगावो देवमातरएवच । देवपत्न्योद्रुमानागा दैत्याश्चाप्सरसाङ्गणाः ७ ॥ अस्त्राणिसर्वसस्त्राणि राजानोवाहनानिच औषधानिच रत्नानि कालस्यावयवाश्चये ८ ॥ सरितः सागराः शैलास्तीर्था-

शिवम् ७९

ण्यायचस्वाहा ८०। ओंनमः सोभ्यायचप्रतिसर्य्यायचस्वाहा ८१। ओंनमोयाम्यायचक्षेम्यायचस्वाहा ८२। ओंनमः स्लोका-

निजलदानदाः। एतेत्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ९॥ अन्येपिमन्त्राः वेदव्यासश्चवाल्मीकी-
रामश्चापिपराशरः। देवलः पर्वतश्चैव दुर्वासाभार्गवस्तथा १॥ याज्ञवल्क्यश्चजाबालिर्जमदग्निः
शुचिश्रवाः। विश्वामित्रः स्थूलशिरा श्च्यवनोत्रिर्विदूरथः २॥ एकतश्चद्वितश्चैव त्रितोगौतमगालवौ।
शाण्डिल्यश्चभरद्वाजो मौद्गल्योवेदवाहनः ३॥ कात्यायनश्चकरवश्च वालखिल्यस्तथैव च। पृथु-
र्दिलीपोभरतो मान्धाताचपुरूरवाः ४॥ अम्बरीषः ककुत्स्थश्च मुचकुन्दोथभूभृतः श्वेतश्चश्रृङ्गवान्मे
रुर्विन्ध्याद्रिर्गन्धमादनः ५॥ माल्यवान्पारिपात्रश्च सर्वएवमहीधराः। ऋग्वेदोथयजुर्वेदः सामवेदो-
ह्यथर्वणः ६॥ शिक्षाकल्पोव्याकरणं निरुक्तंज्योतिषन्तथा। छन्दशास्त्राणिसर्वाणि पुराणैः सह-

यचावसान्यायचस्वाहा ८३। ओंनमः उर्व्वर्य्यायचखल्यायचस्वाहा ८४। ओंनमोव्वन्यायचकक्ष्यायचस्वाहा ८५। ओंनमः

ह० लेःसह ७॥ साङ्ख्यंयोगग्रन्थराजंवंशैवंपाशुपतन्तथा। गायत्री पापसमनी दुर्गादेवीमहाशिवः ८॥
म० स्थानानिचसमस्तानि पुण्यान्यायतनानिच। लवणः क्षीरतोयश्च घृतमण्डोदकस्तथा ९॥
रु० दधिमण्डः सुरोदश्च इक्षुस्वादूदकस्तथा। पुष्करञ्चप्रयागञ्च प्रभासन्नैमिषन्तथा १०॥
प० गयाशिरोब्रह्मशिर स्तथैवोत्तरमानसं। गंगाद्वारंकु शावर्तं विल्वकन्नीलपर्वतं ११॥
८० वाराहंभृगुतुंगञ्च शालिग्रामसरस्तथा पूर्पारकंपौण्डरीकंगंगासागरसंगमं १२॥ धर्मारण्यंफ-
लातीर्थं मविमुक्तंतुमोक्षदं। गंगासरस्वतीपुण्याशरयूगण्डकीतथा १३॥ कौशिकीयमुनाक्षी- शिवम् ८०
प्राचन्द्रभागाचगोमती। मंदाकिनीदशार्णांच तामसीचकुमुद्वती १४॥ वेणावेतरणीभीमा

ओंनमोदुन्दुभ्यायचाहनन्यायचस्वाहा ९२। ओंनमोधृष्णावेचप्रमृशायचस्वाहा ९३। ओंनमोनिषंगिणेचेषुधिमतेचस्वाहा ९४।

कृष्णावेण्याचवंजरा। गोदावरीभीमरथा गौतमीचाम्बुनद्यपि १५॥ तुङ्गभद्राताम्रपर्णीका-
वेरीवेत्रवत्यपि। नन्दाचालकनन्दाचङ्करतोयाचपिप्पला॥ १६॥ सर्वपापशमन्यस्त्वसर्वलोकस्य-
मातरः। स्वतोयपूर्णैः कलशै रभिभिषिञ्चन्तुसर्वदो १७॥ भूराद्याः सप्तलोकाश्च पाता-
लानितथैवच। द्वीपाजम्ब्वादिकाः सप्त तथासप्तैवसिन्धवः १८॥ ब्रह्मादिसप्तकल्पाश्च मन-
वश्चचतुर्दश॥ कृतन्त्रेताद्वापरञ्च कलिंचेतिचतुर्युगं १९॥ संवत्सराश्चऋतवो मासपक्ष-
दिनानिच एतेत्वामभिषिंचन्तु सर्वकामार्थसिद्धये २०॥ अभिषेकानन्तरम् सर्वौषधीभि रनु-
लिप्ताङ्गः सपत्नीको यजमानो महानद्यादौ गृहेवास्नात्वाभिषेक वस्त्रा ण्याचार्य्या-

ओंनमस्तीक्ष्णेषवेचायुधिनेचस्वाहा ९५। ओंनमः स्वायुधायचसुधन्वनेचस्वाहा ९६। ओंनमः स्रुत्यायचपथ्यायचस्वाहा ९७।

ओंनमः कव्यायचनीप्यायचस्वाहा ९८। ओंनमः कुल्यायचसरस्यायचस्वाहा ९९। ओंनमोनादेयायचवैशन्तायचस्वाहा १००।

यदद्यात् । अभिषेकानन्तरम् दक्षिणादानमुक्तम् । मात्स्ये । वासिष्ट्यान्तु दक्षिणादानो-
त्तरमेवाभिषेकइति । ततः शुक्लमाल्यांबरधरः सपत्नीकोयजमानो ग्रहपीठदेवतानाम् रुद्र-
पीठदेवतानाम् वास्तुदेवतानाञ्च गन्धाद्युपचारैःकृतपूजाम् विधाय पुष्पाञ्जलिंदत्वा प्रदक्षि-
णीकृत्य साष्टाङ्गंनत्वा । अपराधसहस्राणीत्यादिभिः क्षमाप्य । (१ उत्तिष्टब्रह्मणस्पते । यान्तु-
देवगणाः सर्वेंपूजामादायपार्थिवीं । इष्टकामःप्रसिद्ध्यर्थं पुनरागमनायचेति । मन्त्राभ्यां पीठ-
त्रयदेवताः पुष्पाक्षतप्रक्षेपेण विसृज्य पीठत्रयमाचार्यायदद्यात् । इदंग्रहपीठम् सोपस्करम्
वास्तुपीठञ्च सदक्षिणाकम् तुभ्यमहंसंप्रददे इतिदद्यात् । रुद्रप्रतिमा दानेमन्त्रः । ओरुद्रप्रतिमां

ओंनमः कूप्यायचावट्यायचस्वाहा १०१। ओंनमोवीध्र्यायचातप्यायचस्वाहा १०२। ओंनमोमेघ्यायचविद्युत्यायचस्वाहा १०३।

सुवर्णमयि वस्त्रयुगान्वितम। श्रीरुद्रप्रीतयेचापि सर्वानिष्टनिवृत्तये। प्रार्थिताभिष्टसंसिद्धै तुभ्यं श्रीरुद्ररूपिणे। प्रददेहंविधानेन यथोक्तफलमस्तुमे। इमांश्रीरुद्रप्रतिमां वस्त्राद्यलङ्कृतांसोपस्करपीठयुताञ्च श्रीरुद्ररूपिणे आचार्यायतुभ्यमहं संप्रददे इतिदद्यात्। यदातु रुद्रपीठेमार्कंतम् लिङ्गं-स्थापितम् तदा। इदन्तुमार्कंतम् लिङ्गम् रौप्यपीठसमन्वितम्। ददाम्यहंविधानेन यथोक्तफलस्तुमे नन्दिनाराजतेनापि श्वेतवस्त्रयुगान्वितम्। धान्यैर्द्वादशभिर्युक्त मेकादशफलान्वितम्। यदाकाश्मीर-लिङ्गन्तम् मार्कंतलिङ्गस्थाने काश्मीरलिङ्गमितियोज्यम्। द्वादशधान्यानितु। व्रीहि यव तिल माष मुद्ग खल्व गोधूम मसूर प्रियङ्गु अणु श्यामाक नीवाराः। एतेषांमानम् प्रस्थाधिकम् द्रोणावधि

ह० यथाशक्तिर्वा । उक्तधान्याभावेयथा संभवंग्राह्यम् । ततोग्निं अग्नेनयेति मन्त्रेण गन्धाद्युपचारैः
म० संपूज्य । प्रार्थयेत् । गच्छत्वम्भगवगन्नग्ने स्वस्थानकुण्डमध्यतः । हव्यमादायदेवेभ्यः शीघ्रन्देहि-
रु० प्रसिद्मे । इति । गच्छ गच्छ सुरश्रेष्ठ स्वस्थानेपरमेश्वर । यत्रब्रह्मादयो देवा स्तत्रगच्छ हुताशनेति-
प० मन्त्रेण (१) वयट्ठं हित्वा । अनुवोरैरनु । (२) यत्तयज्ञगच्छेतिचमन्त्रैस्त्वाग्निं विसृजेत् । ततोयान्तु-
८२ देवता इतिमर्शमण्डपदेवता द्वारदेवताश्च विसृज्य पीठयुतं मण्डपं आचार्यायसमाचारा त्तद-
स्थायवादद्यात् । तद्यथा । असुमण्डपं ध्वजपताकाचामरादर्शं वितानवस्त्र कलश वास्तुपीठ फल- शिवम्

८२



(१) ८।२०। (२) ८।२२।

ओंनमः शङ्कराय च मयस्कराय च स्वाहा ११६। ओंनमः शिवाय च शिवतराय च स्वाहा ११७। ओं नमः पार्य्याय चावार्य्याय च स्वाहा ११८।

पुष्पाद्युपस्कारयुतं सदक्षिणाक माचार्य्यायसदस्याय वा तुभ्यमहंसंप्रददे नममेति तद्धस्तेसाक्षतंजलं प्रक्षिपेत्। आचार्यस्तु देवस्यत्वेतिगृह्य स्वस्तीत्युक्त्वा कोदादितिकामस्तुतिं पठेत्। ततस्तस्मै यज्ञ-पात्राणि पूजोपकरणपात्राणिच दद्यात्। प्रतिपत्तिरूपत्वा न्नात्रदानवाक्यम। ततः कृत्तस्य हवना-त्मक अमुकरुद्र कर्मणः सांगतासिद्ध्यर्थं अमुकसङ्ख्याकान्ब्राह्मणा न्भोजयेत्। तत्र एकरूपेणएकः १॥ रुद्यान्वयःइलघुरुद्रे एकादश ११॥ महारुद्रे एकविंशत्युत्तरंशतम् १२१॥ अतिरुद्रे एतद्वै-कादशगुणम् त्रयोदशशता न्येकत्रिंशच्चेति १३३॥ ब्रह्मार्पणमब्रह्म। चतुर्भिश्च चतुर्भिश्चे त्युक्त्वामयाययथाज्ञानेन यथाकालम् यथाशक्ति यत्कृतम् होमात्मकम् रुद्रानुष्ठाकर्मतेन श्रीभगवान्-

ओं नमः प्रतरणाय चोत्तरणाय च स्वाहा ११९। ओं नमस्तीर्थ्याय च कूल्याय च स्वाहा १२०। ओनमः शष्प्याय च फेन्याय च स्वाहा १२१।

ओं नमः सिकत्याय च प्रवाह्याय च स्वाहा १२२। ओं नमः किं० शिलाय च क्षयणाय च स्वाहा १२३। ओं नमः कपर्दिने च पुलस्तये च



परमेश्वरः प्रियतां ओं तत्सद्ब्रह्मार्पणमस्तु इति साक्षतञ्जलम् भूमौ निक्षिपेत्। ततः पुनर्विशेषेण चन्दन पुष्प वस्त्र ताम्बुल दक्षिणादिभि राचार्यादीनन्यांश्च ब्राह्मणान् पूजयित्वाञ्जलिम्बध्वा संपूर्णतां वाचयेत्। मयायत्कृतं होमात्मकमसुकरुद्राख्यङ्कर्मं तत्कालद्रव्यभक्तिश्रद्धाहीनम् भवद्वचनात् सम्पूर्णमस्तु॥ अस्तु संपूर्णमिति सर्वे ब्रूयुः। ततो यस्यस्मृत्येत्युक्त्वा पुण्याहं वाचयेत्। तदुक्तमाश्वलायनेन। स्वस्तिवाचनमन्वेष्टं सर्वेषाम्वृद्धिकर्मणां। आदावन्ते प्रयोक्तव्य मिति यज्ञविदांमतमिति ततस्तेषां मन्त्राशिषो गृहीत्वा सविनयं तान्विसृज्य ब्राह्मणान्भोजयित्वा दीनानाथांश्च वस्त्रादिभिः सन्तोष्य स्वयं सोत्साहः सुहृन्मित्रादियुतो हविष्यं भुंजीतेति शिवं। होमद्रव्याणि। कृष्णा





स्वाहा १२४। ओं नमः इरिण्याय च प्रपथ्याय च स्वाहा १२५। ओं नमो व्रज्याय च गोष्ठ्याय च स्वाहा १२६। ओं नमस्तल्प्याय च गे-

ह्वायचस्वाहा १२७। ओं नमो ह्रदय्यायच निवेष्प्याय च स्वाहा १२८। ओं नमः काट्यायच गह्वरेष्ठायच स्वाहा १२९। ओं नमः शुष्क्या-

स्तिलाःयवाः। सिद्धितावाब्रीहयः। समिधः आज्यंच ॥

इतिमोरेश्वरसुतखण्डदीक्षितविरचितोहोमात्मकरुद्रानुष्टानप्रयोगःसमाप्तः।

शुभम्।

अथ रुद्रयन्त्रोद्धारःस्कान्दे। प्रणम्य जगतामीश मुमादेहार्द्धधारिणम् यन्त्रोद्धारमहंवक्ष्ये रुद्रकल्पानुसारतः १। मध्येऽष्टतम् समालिख्य तन्मध्येत्र्यचदशाक्षरम्। वहिरष्टदलम्पद्म ततः

यच हरितायच स्वाहा १३०। ओं नमः पांसव्यायच रजस्यायच स्वाहा १३१। ओं नमो लोप्यायचोलप्याच स्वाहा १३२। ओं नमः

ऊर्व्यायचसूर्व्यायचस्वाहा १३३। ॐनमः गर्म्यायचपर्णशदायचस्वाहा १३४। ओंनमः उद्गुरमाणायचाभिघ्नतेचस्वाहा १३५।

षोडशयन्त्रकम् ॥ २ ॥ चतुर्विंशतिपत्राब्जम् द्वात्रिंशत्पत्रकंतथा चत्वारिंशत्पत्रकन्तु वृत्तंसूर्यसमप्रभम् ॥ ३ ॥ पञ्चपद्मात्माकंवृत्तम् चतुरस्रञ्चभूगृहं । सत्वंरजस्तमश्चेति त्रिगुणैःपरितोवृतम् ॥ ४ ॥ चतुर्द्वारम्द्वारदेशा द्वहिर्नागसमावृतम् । रुद्रपीठमितिख्यातम् देवतास्तत्रविन्यसेत् ॥ ५ ॥ चत्वारिंशच्छतञ्चैकम् देवतानामुदाहृतम् कर्णिकामध्यदेशेतु रुद्रम्मञ्चासनमालिखेत् ॥ ६ ॥ नमोभगतेरुद्रायेति तारादिकंन्यसेत् सोयंदशाक्षरोमन्त्रः सर्वकामार्थसिद्धिदः ॥ ७ ॥ प्रणवादिनमोन्तानि पञ्चास्यानिततःपरम् । सद्योजातंवामदेव मघोरन्तदनन्तरम् ॥ ८ ॥ ततस्तत्पुरुषंप्रोक्त मीशानंपञ्चमंक्रमात् । प्रधानमिदमाख्यातम प्रथमावरणेततः ॥ ९ ॥ दलेष्वष्टसुनन्द्यादी न्पूर्वादि-

ओंनमऽआखिदतेचप्रखिदतेचस्वाहा १३६ ओंनमः इषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमः स्वाहा १३७। ओंनमोवः किरिकेभ्योदे-

द्रापेऽअन्धसस्पतेदरिद्रनीललोहित । आसाम्प्रजानामेषाम्पशूनाम्माभेर्मारोङ्मोचनः किञ्चनाममत् स्वाहा १४२ । इमारुद्राय । तवसे

क्रमतोन्यसेत् । पूज्यपूजकयोर्मध्ये प्राचीस्यादग्रलेखने ॥ १० ॥ आदौनन्दीमहाकालौ गणे-
शवृषभौक्रमात् । ततोभृङ्गिरिटिस्कंदौ माचण्डेश्वरसंज्ञकाः ॥ ११ ॥ षोडशारेततःपद्मे द्वितीया-
वरणेयजेत् । अनन्तञ्चतथासूक्ष्मं शिवञ्चैकपदन्तथा ॥ १२ ॥ एकरुद्रन्त्रिमूर्त्तिञ्च श्रीकण्ठवामदे-
वकम् । ज्येष्ठं श्रेष्ठं तथारुद्रङ् कालङ्कलविकारणम् ॥१३॥ बलंबलविकरणम् बलप्रथनन्तथा । तृती-
यावरणेपद्मे चतुर्विंशद्दलन्तथा ॥१४॥ अणिमामहिमार्चेति लघिमागरिमातथा । प्राप्तिःप्राकाम्यमी-
शित्वम् वशित्वम् चाष्टसिद्धयः ॥ १५॥ ततःपरंक्रमेणैव न्यसेद्ब्राह्म्यादिदेवताः । ब्राह्मीमाहेश्वरी-
चैव कौमारीवैष्णवीतथा ॥१६॥ वाराहीन्द्रीचचामुण्डा चण्डिकाचेतिताःक्रमात् । ततोष्टस्वसितां-

कपर्दिनेच्चयद्वीरायप्रभरामहेमतोः । यथाशमसद्विपदेचतुष्पदेव्विश्वम्पु ष्टङ्गामेऽअस्मिन्ननातुरम् स्वाहा:१४३ । याते । रुद्रशिवातनूः

शिवाविश्वाहाभेषजी । शिवारुतस्यभेषजीतयानोमृडजीवसे स्वाहा १४४ ।' परिनोरुद्रस्यहेतिर्वृणक्तु परित्वेषस्यदुर्मतिरघायोः ।

---

रु० गादौ न्भैरवान्वि न्यसेत्सुनः ॥ १७ ॥ असितांगोरुरुश्चण्डः क्रोधउन्मत्तभैरवः । कालभीषणसंहारा
म० भैरवाश्चाष्टकीर्तिताः ॥१८॥ द्वात्रिंशत्पत्रकेपूर्वम् भवाष्टकमुदाहृतम् । भवःशर्वश्चईशानः पशुपतिस्ततः
रु० परम ॥१९॥ रुद्रश्चोग्रश्चभीमश्चमहांश्चेतिततःपरम् । ततोनन्तोवासुकिश्च तक्षकश्चकुलीरकः ॥२०॥
प० ८५ कर्कोटकःशङ्खपालः कम्बलोश्वतरस्तथा । ततोष्टसुन्यसे द्वैन्यं पृथुं हैहयमर्जुनम् ॥ २१ ॥ शाकुन्त-
लेयंभरतम् नलंराममितिक्रमात् । ततःकुलाचलानष्टौ दलेष्वष्टसुविन्यसेत् ॥ २२ ॥ हिमवान्निषध- शिवक
श्चोविंध्यो माल्यवान्पारियात्रकः । मलयोहेमकूटश्च गंधमादनसंज्ञकः । चत्वार्यौवर्णान्येवं पञ्चमावर- ८५.
णेततः । चत्वारिंशद्दलेपद्मे पञ्चमावरणेन्यसेत् ॥ २३ ॥ इन्द्राद्यष्टौलोकपाला नष्टसुक्रमशोन्यसेत् ।

---



अवस्थिराम घवञ्चस्तनुष्वमोढ्वस्तोकायतनयायमृड स्वाहा १४५ मीढुष्टमशिवतम । शिवोनः सुमनाभव परमेवृक्षआयुधन्निधा-

यज्ञत्तिं वसानऽआचरपिनाकम्बिबभ्रदागहि स्वाहा १४६ । विकिरिद्रविलोहित । नमस्तेऽअस्तुभगवः । यास्ते सहस्त्रं हेतयो

इन्द्रमग्निंयमञ्चैव निऋतिंवरुणन्तथा ॥ २४ ॥ वायुंकुवेरमीशानम् दलेष्वष्टसु विन्यसेत् । इन्द्रादि-
लोकपालाना मष्टौशक्तिस्तुविन्यसेत् ॥२५॥ शची:स्वाहाचवाराही खड्गिनीवारुणीतथा । मृगारूढाच-
कौवेरी शूलिनीचतथाष्टमी ॥ २६ ॥ ततोष्टानामायुधानि वज्रादीनिचविन्यसेत् । वज्रं शक्तिन्दण्ड-
खड्गौ पाशाङ्कुशगदाअपि । त्रिशूलंलोकपालाना मायुधानिक्रमाल्लिखेत् । ततोष्टौवाहनान्येषा मष्ट-
सुक्रमतोन्यसेत् ॥ २९ ॥ ऐरावतन्तथामेषं महिषंप्रेतसंज्ञितम् । मकरञ्चमृगञ्चैव नरञ्चवृषभन्तथा
॥ ३० ॥ ऐरावतादयोप्यष्टौ दिग्गजास्तदनन्तरम् । ऐरावत:पुण्डरीको वामन:कुमुदोञ्जनः ॥ ३१ ॥
पुष्पदन्त:सार्वभौमः सुपतीकश्चदिग्गजाः । भूगृहान्त:पुनर्लेख्याः पञ्चपञ्चात्मकाबहिः ॥ ३२ ॥ इन्द्रं-

न्यमस्मन्निवपन्तुताः स्वाहा । १४७ । सहस्त्राणिसहस्त्रशोबाह्वोस्तवहेतय: तासामीशानोभगव: पराचीनामुखाकृधि स्वाहा । १४८ ।

क्षितिकण्ठाः । शर्वाऽअधः क्षमाचराः । तेषाᳬ० सहस्रयो० स्वाहा १५२ । येवृक्षेषु । शष्पिञ्जरानीलग्रीवाः विलोहिताः । तेषाᳬ०

चविंयंपीत वर्णं सप्तशतैःफणैः ॥ ४० ॥ युक्तमुत्तुङ्गकायञ्च नैऋत्यांदिशिविन्यसेत् । शङ्खपालंचविय-ञ्चपीतंसप्तशतैःफणैः ॥ ४१ ॥ युक्तमुत्तुङ्गकायञ्च वायव्यांदिशिपूजयेत् । कम्बलंधूम्रवर्णञ्च दृष्ट्वांवि-शत्फणैर्युतम् ॥ ४२ ॥ ईशान्यान्दिशिविन्यस्य पूजयेद्विधिवत्ततः । रुद्रपीठमिदंसर्वम् रुद्रकल्पेच-विश्रुतम् ॥४३। शंभुनस्वमाख्यातम् भक्तानुग्रहकारिणा । कुंकुमागरुकर्पूरै भूर्जपत्रेथवापुटे ।४४। लिखितम्पूजितंभक्त्या सर्वकर्मार्थसिद्धिदम् । यन्त्रंमन्त्रमयम्प्रोक्तम् मन्त्रात्मादेवतेतिच ॥४५॥ पूजनीयंप्रयत्नेन तेनेदन्देवताम्यं । नाग्निचौरभयन्तत्र नचराजभयंक्वचित् ॥ ५६ ॥ यत्रेदंलिखितं-यन्त्रंपूज्यतेविधितःसदा । इतिस्कन्दपुराणोक्तंरुद्रयन्त्रम् । अथध्यानम् । शुद्धस्फटिकसंकाशंत्रिनेत्रम्प-

सहस्रयो० स्वाहा १५३ । येभूतानामधिपतयोविशिखासः कपर्दिनः । तेषाᳬ० सहस्रयो० स्वाहा १५४ । येपथाम्पथिरक्षयऽऐल-

असङ्ख्यातासहस्राणि येरुद्राऽअधिभूम्याम् । तेषाठं॰सहस्रयोजनेवधन्वानितन्मसि स्वाहा ।१४९। अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि।

विन्यस्यपूर्वस्यां साग्नेय्यामग्निमेवच । दक्षिणस्यांयमञ्चैव नैर्ऋत्यांनिर्ऋतिस्तथा ॥३३॥ प्रतीच्यांवरु-
णंवायुं वायव्यांविन्यसेत्ततः । कुबेरञ्चैवकौबेर्य्यां मीशान्यामीशमालिखेत् ॥३४॥ विरूपाक्षन्तुविन्यस्ये
दाग्नेयामग्नियोगतः । नैर्ऋत्यांनिर्ऋतेयोगे विश्वरूपञ्चविन्यसेत् ॥ ३५ ॥ वायव्यांवायुयोगेच
लिखेत्पशुपतिन्तथा । ईशान्यामूर्ध्वलिङ्गन्तु न्यसेदीशानयोगतः ॥ ३६ ॥ प्रागादिक्रमतोलेख्याः शेषा-
द्याभूगृहाद्बहिः । विप्रवर्णंश्वेतवर्णम् सहस्रफणसंयुतम् ॥ ३७ ॥ शेषंविन्यस्यपूर्वस्यां पूजयेदुपचार-
कैः । तक्षकंवैश्यवर्णञ्च नीलम्पञ्चशतैःफणैः ॥ ३८ ॥ युक्तमुत्तुङ्गकायञ्च आग्नेयान्दिशिविन्यसेत् ।
अनन्तंविप्रवर्णञ्च तथाकुङ्कुमवर्णकम् ॥ ३९ ॥ सहस्रफणसंयुक्तम् दक्षिणस्यांप्रपूजयेत् । वासुकिं-

तेषाठं॰सहस्रयो॰ सिस्वाहा १५०। नीलग्रीवाः । शितिकण्ठादिवठं॰रुद्राऽउपश्रिताः । तेषाठं॰सहस्रयो॰ सिस्वाहा १५१। नीलग्रीवाः

हृदाऽआयुध्युं धः। तेषाॅं०सहस्रयो०स्वा०।१५५। येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः। तेषाॅंसहस्रयो०स्वा०।१५६। येन्न्नेषु। विविद्ध्यन्तिपात्रेषुपिबतोजनान्। तेषाॅंसहस्रयो०स्वाहा। १५७॥ यऽएतावन्तश्चभूयाॅंसश्च दिशोरुद्राव्वित स्थिरे। तेषाॅं०सह स्रयोस्वा०॥१५८॥ नमोस्तु। रुद्रेभ्योयेदिवियेषांव्वर्षमिषवः। तेभ्योदशप्राचीर्द्दशदक्षिणादशप्रतोचीर्द्दशोदीचीर्द्दशोर्द्ध्वा। तेभ्योन-

---

ञ्चवक्त्रकङ्गाधरन्दशभुजं सर्वाभरणभूषितम्। नीलग्रीवंशशाङ्काङ्कंनागयज्ञोपवीतिनम्। व्याघ्रच-र्मोत्तरीयञ्चवरेण्यमभयप्रदम्। कमण्डल्वक्षसूत्राभ्यामन्वितम् शूलपाणिनम्। ज्वलन्तंपिङ्गलजटाजू-टमुद्योतकारिणम्। अमृतेनाप्लुतम् हृष्टमुमादेहार्द्धधारिणम्। दिव्यसिंहासनासीनम् दिव्यभोगसम-न्वितम्। दिग्देवतासमायुक्तंसुरासुरनमस्कृतम्। नित्यञ्चशाश्वतंशुद्धंध्रुवमक्षरमव्ययं। सर्वव्यापिनमी शानंरुद्रंवैविश्वरूपिणम्। एवन्ध्यात्वाद्विजः सम्यक्ततोयजनमाचरेत् ॥ १ ॥

---

मोऽअस्तुतेनोवन्तु तेनोमृडयन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे दध्मःस्वाहा ॥१५९॥ नमोस्तु। रुद्रेभ्योयेन्तरिक्षेयेषांव्वातइषवः। तेभ्योदशप्राचीर्दशदक्षिणादशप्रतोचीर्दशोदीचीर्दशोर्द्ध्वाः। तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे दध्मस्वाहा॥१६०॥ नमोस्तु। रुद्रेभ्योयेपृथिव्यांयेषामन्नमिषवः तेभ्योदशप्राचीर्दशदक्षिणादशप्रतोचीर्दशोदीचीर्दशोर्द्ध्वाः। तेभ्यो-नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः स्वाहा ॥१६१॥ इतिएकषष्ठ्युत्तरशतधाविभागपञ्चमगमत्

